॥ नीलरुद्रोपनिषत् दीपिकासमेता ॥
ॐ तत्सद्ब्रह्मणे नमः ।
नारायणविरचितदीपिकासमेता ।

नीलरुद्रोपनिपदि षोडश्यां खण्डकत्रयम् ॥

श्रुतिरूपेण तं देवं स्तौत्यपश्यमिति क्रमात् ॥ १॥

अस्पर्शयोगमुक्त्वा तत्सम्प्रदायप्रवर्तकं परमगुरुं
योगसिद्धिप्रदं नीलरुद्रं स्तौति-
ॐ अपश्यं त्वाऽवरोहन्तं दिवितः पृथिवीमवः ॥

अपश्यमस्यन्तं रुद्रं नीलग्रीवं शिखण्डिनम् ॥

दिव उग्रोऽवारुक्षत्प्रत्यष्ठाद्भूम्यामधि ॥

अपश्यमिति । दिवितो दिवः । पृथिवीं भूमिमवोऽवस्तादवरोहन्तं
त्वामहमपश्यमिति मन्त्रद्रष्टुर्वचः ।
अस्यन्तम् । असु क्षेपणे । क्षिपन्तं दुष्टान् ।
अनेनावतारप्रयोजनमुक्तम् । अयं ब्रह्मणः पुत्रः सनकादिषु
सृष्टिमकुर्वत्सु ब्रह्मणः क्रोधादुत्पन्नः कुमारो रुरोद
तेनाऽऽश्वास्य रुद्र इति नाम दत्तं तत एकादश स्थाना-
न्येकादश नामान्येकादश पत्नीश्च ददौ तत्सृष्टानां
रुद्राणामसङ्ख्याततां दृष्ट्वा तं भयात्तपसे न्ययोजयत्स भुवि
तपश्चचारेतीतिहासः ।
शिखण्डिनम् शिखण्डो बर्हचूडयोः इति विश्वः ।
तयोरन्यतरदस्यास्तीति शिखण्डी तं दिवः सकाशादुग्रो
रुद्रोऽवारुक्षदवतीर्णवान् । प्रत्यष्ठात् ।
प्रतिष्ठां स्थितिं कृतवान् । भूम्यामधि ।
अधिरीश्वर इत्यधिः कर्मप्रवचनीयः ।
यस्मादधिकं यस्य चेश्वरवचनमिति सप्तमी ।
भूमेरीश्वर इत्यर्थः ।
जनासः पश्यतेमं नीलग्रीवं विलोहितम् ॥

एष एत्यवीरहा रुद्रो जलासभेषजीः ॥

वि तेऽक्षेममनीनशद्वातीकारोऽप्येतु ते ॥

जनास । आज्जसेरसुक् । संवोधने चेति प्रथमा । एत्यागच्छति ।
न वीरहाऽवीरहा सौम्यः । यद्वाऽवीराणि पापानि हन्त्यवीरहा ।
एत्याऽऽगत्य वीरान्दैत्यान्हन्तीति वा । जल आसः क्षेपो यासां ता
जलासाश्च ता भेषज्यश्च ता एतीत्यन्वयः ।
जलक्षिप्तानामोषधीनाममङ्गलनाशकत्वं रुद्रसन्निधानादेव ।
यद्वा समुद्रमथनावसरे समुद्रे क्षिप्तानामोषधीनामुद्भूतं
विषं पातुमवतीर्णत्वादेवमुक्तम् । ते तव लोकस्याक्षेमं
व्यनीनशत् । अनेन क्षेमकारित्वमुक्तम् । अलब्धलाभो
योगस्तत्कारित्वमप्याह । वातीकार इति ।
वातिः प्राप्तिः । अप्राप्तं प्राप्तं करोतीति वातीकारः सोऽपि ते
तवापूर्वलाभकरोऽप्येत्वागच्छतु ।
योगक्षेमकरोऽभिषेकजले सन्निहितो भवत्वित्यर्थः ।
मन्त्रलिङ्गादभिषेके विनियोगः ।
नमस्ते भव भामाय नमस्ते भव मन्यवे ॥

नमस्ते अस्तु वाहुभ्यामुतोत इषवे नमः ॥

भामः क्रोधः । मन्युस्तत्पूर्वावस्था । उतापि ।
उतेषवे बाणरूपाय । अस्तवे । असु क्षेपणे
तवेन्प्रत्ययस्तुमर्थे । अस्तु क्षेप्तुमित्यर्थः ।
यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे ॥

शिवां गिरित्र तां कृणु मा हिंसीः पुरुषान्मम ॥

कं क्षेप्तुं गिरिशन्तं श्यति श्यन्गीरे
श्यन्गिरिश्यन्सम्बन्धसामान्ये षष्ठ्या समासः ।
तं गिरिशन्तम् । छान्दसो यमलोपः ।
यद्वा कंशम्भ्यं्या वभयुस्तितुतयसः । शमस्यास्ति शन्तो ?? kaMshambhMyA
गिरिणा शन्तः सुखी पर्वतोत्पन्नत्वादिषोः ।
हे गिरित्र गिरिरक्षक तां शिवां कल्याणीं कुरु ।
शिवेन वचसा त्वा गिरिशाच्छा वदामसि ।
यथा नः सर्वमिज्जगदयक्ष्मं सुमना असत् ॥

या त इषुः शिवतमा शिवं बभूव ते धनुः ।
शिवा शरव्या या तव तया नो मृड जीवसे ॥

अच्छा वदामसि । अच्छ निर्मलं वदामः ।
अच्छशब्दस्य निपातस्य चेति दीर्घः ।

इदन्तो मसि । इदनर्थको निपातः । अयक्ष्मं नीरोगम् ।
सुमनाः सुमनस्कम् । असद्भवेत् ।
लिङर्थे लेट् । तिप् । इतश्च लोपः परस्मैपदेषु ।
लेटोऽडाटावित्यट् । शरव्या शरसन्धात्री
ज्या शरो दध्यग्रबाणयोः इति विश्वः । शरमर्हति यत् ।
अव्शरस्य चेत्यवादेशः । शरुशब्दाद्वा सिद्धम् ।
शरुरायुधकोपयोः । उगवादिभ्यो यत् । जीवसे जीवितुं मृड मोदय ।
यद्वा हे मृड तया तन्वा नोऽस्माञ्जीवसे जीवयसि ।
या ते रुद्र शिवा तनूरघोरा पापकाशिनी ।
तया नस्तन्वा शन्तमया गिरिशन्ताभिचाकशत् ॥

असौ यस्ताम्रो अरुण उत बभ्रुर्विलोहितः ।
ये चेमे अभितो रुद्रा दिक्षु श्रिताः सहस्रशो वैषां
हेड ईमहे ॥ १॥

शन्तमया । अतिशयेन शं शन्तमा तया । अभिचाकशत् ।
कशेर्यङ्लुङन्ताल्लेट्ति- पट् ।
अतिशयेन प्रकाशयत्विति प्रार्थना ।
बभ्रूः पिङ्गलो वैषां ह ईडे स्तुतये । ईमहे कामयामहे ।
विष्णुपक्ष आभीराः ॥ १॥

अदृश्यं त्वाऽवरोहन्तं नीलग्रीवं विलोहितम् ॥

उत त्वा गोपा अदृशन्नुत त्वोदहार्यः ॥

उतो त्वा विश्वा भूतानि तस्मै दृष्टाय ते नमः ॥

गोपा गोपाला अदृशन्नपश्यन् । उदहार्यः पानीयहारिण्यः ।
विश्वा विश्वानि भूतानि । अदृशन् । योगिनाप्यदृश्यं त्वां
कृपयाऽऽविर्भवन्तमादित्यवत्प्रकाशमानं पामरा अपि ददृशुरित्यर्थः ।
नमोऽस्तु नीलशिखण्डाय सहस्राक्षाय वाजिने ॥

अथो ये अस्य सत्त्वानस्तेभ्योऽहमकरं नमः ॥

वाजिनेऽन्नवते बाणरूपाय वा । सीदन्ति सत्त्वानो गणाः ।
नमांसि त आयुधायानातताय धृष्णवे ।
उभाभ्यामकरं नमो बाहुभ्यां तव धन्वने ॥

प्रमुञ्च धन्वनस्त्वमुभयो राज्ञोर्ज्याम् ।
याश्च ते हस्त इषवः परा ता भगवो वप ॥

नमांसि नमस्काराः । नाऽऽततायानातताय ।
धृष्णवे प्रगल्भाय । बाहुभ्यां कृत्वा धन्वने
नमोऽकरवमित्यर्थः । उभयोररिप्रत्यरिभूतयो
राज्ञोर्धन्वनोर्ज्यां परिप्रमुञ्चानाततां कुरु ।
राज्ञोर्विग्रहे लोकानां क्लेशो भवति ततस्तं शमयेति भावः ।
हे भगवो यास्ते हल इषवो बाणास्ताः परा वप पराङ्मुखान्मुञ्च ।
त्वमपि कोपं लोकेषु मा कृथा इति भावः ।
इन्द्ररूपेण जगद्रक्षेति प्रार्थयते-
अवतत्य धनुस्त्वं सहस्राक्ष शतेषुधे ।
निशीर्य शल्यानां मुखा शिवो नः शम्भुराभर ॥

विज्यं धनुः शिखण्डिनो विशल्यो बाणवा उत ।
अनेशन्नस्येषवः शिवो अस्य निषङ्गतिः ॥

अवतत्येति । अधिज्यं कृत्वा । सहस्राक्ष शक्ररूप ।
शतमिषुधयस्तूणा यज्ञरूपा यस्य तत्सम्बोधनम् ।
निशीर्य तीक्ष्णीकृत्य मुखा मुखानि नोऽस्मान्शिवः कल्याणरूपः
शम्भुः सुखहेतुः सन्नाभर धारय पोषय ।
बाणवांस्तूणीरो विशल्योऽस्तु । शल्यरहितो भवतु । वैरिषु हतेषु
तत्प्रयोजनाभावात् । अनेशन्नदृभ्या अभूवन् ।
नशिमन्योरलिट्येत्वमिति वार्तिकेन लुङि पुषाद्यङ्येत्वम् ।
निषङ्गतिः । निषङ्गः ।

परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः ।
अथो य इषुधिस्तवारे अस्मिन्निधेहि तम् ॥

या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः ।
तया त्वं विश्वतो अस्मानयक्ष्मया परिभुज ॥

विश्वतः सर्वतोऽस्मान्परिवृणक्तु परिवृत्य रक्षतु ।
अरे सम्बोधने । अथो पश्चाद्रक्षणानन्तरं
यस्तवेषुधिरस्मिन्निषुधौ तां हेतिं बाणं निधेहि स्थापय ।
हे मीढुष्टम मीढवत्तमेत्यर्थः । सेचकतम ।
अयक्ष्मया सज्जया तया हेत्या परिभुज परिपालय ।
नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु ।

ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ॥

ये चामी रोचने दिवि ये च सूर्यस्य रश्मिषु ।
येषामप्सु सदस्कृतं तेभ्यः सर्पेभ्यो नमः ॥

या इषवो यातुधानानां ये वा वनस्पतीनाम् ।
ये वाऽवटेषु शेरते तेभ्यः सर्पेभ्यो नमः ॥ २॥

सदस्कृतं गृहं कृतम् । यातुधानानां रक्षसां
वनस्पतीनां चेषवः सर्पास्ते हि जनान्दशन्ति ।
अवटेषु गर्तेषु ॥ २॥

केदाराधीशमहिषस्वरूपं स्तौति-
यः स्वजनान्नीलग्रीवो यः स्वजना□ हरिरुत ।
कल्माषपुच्छमोषधे जम्भयाऽऽश्वरुन्धति ॥

य इति । यः शिवः स्वजनान्भक्तान्प्रति नीलग्रीवः ।
यश्च स्वजनान्भक्तान्प्रति हरिर्हरितवर्णो भक्तवत्सलो न भवति ।
महिषस्य हि तादृग्रूपं सम्भवति ।
यद्वा नीलग्रीवो रुद्रो हरिर्विष्णुश्च भवति ।
अनेन हरिहरयोरेकरूपतोक्ता । हे ओषधे । अरुन्धति रोधरहिते
तं कल्माषपुच्छं कृष्णपाण्डुरपुच्छम् ।
आशु शीघ्रं जम्भय स्ववीर्येण वीर्यवन्तं कुरुषे ।
औषधीनां पशुभ्यो बलप्रदत्वात् ।
कल्माषो राक्षसे कृष्णे कल्माषः कृष्णपाण्डुरे इति विश्वः ।
केदारेश्वरस्य महिषरूपत्वात्पुच्छवत्ता सम्भवति ।
बभ्रुश्च बभ्रुकर्णश्चनीलागलशीलाः शिवः ।
पश्य सर्वेण नीलशिखण्डेन भवेन मरुतां पिता ॥

विरूपाक्षेण बभ्रुणा वाचं वदिष्यतो हतः ।
सर्वनीलशिखण्डेन वीर कर्मणि कर्मणि ॥

बभ्रुः क्वचिदवयवे पिङ्गलवर्णः ।
बभ्रुकर्णः पिङ्गलवर्णकर्णः । नीलागलशीलाः शिव इत्यत्र
नीलग्रीवश्च यः शिव इति पाठो युक्तः । पितेति ।
तृतीयार्थे प्रथमा पित्रेत्यर्थः । अथ वाचं वदिष्यतः पिता
देहिमात्रस्य जनको ब्रह्मा येनेश्वरेण हतस्तं त्वं पश्येत्यन्वयः ।
हे वीर कर्मणि कर्मणि विहितनिषिद्धरूपे ।

इमामस्य प्राशं जहि येनेदं विभजामहे ।
नमो भवाय नमः शर्वाय नमः कुमाराय शत्रवे ॥

नमो नीलशिखण्डाय नमः सभाप्रपादिने ॥

इमामस्य जनस्य । प्राशं पृच्छतीति प्राट्तां प्राशं
प्रच्छिकां वाचम् । जहि वेदविहितं
निषिद्धकर्मविषयं संशयं निराकुर्वित्यर्थः ।
येन कर्मणेदं जगद्विभजामहे कर्मभूमिभोगभूमिरूपेण
विभक्तं कुर्महे । कुमाराय कालानभिभूताय स्कन्दरूपाय वा ।
शत्रवे संहर्त्रे । सभाप्रपादिने
सभां प्रपद्यते तच्छील सभाप्रपादी तस्मै सभ्यायेत्यर्थः ।
यस्य हरी अश्वतरौ गर्दभावभितःसरौ ।
तस्मै नीलशिखण्डाय नमः सभाप्रपादिने
नमः सभाप्रपादिन इति ॥ ३॥

इत्यथर्ववेदे नीलरुद्रोपनिषत्समाप्ता ॥ १८॥

अश्वतरौ ईषदूनमश्वत्वं ययोस्तावश्वतरौ गर्दभादश्वायां
जातौ । अभितःसरावभितः सरत इत्यभितःसरौ गर्दभौ वर्तेते ।
यथा पुरुषोत्तमक्षेत्रस्य नीलमाधवोऽधिष्ठातैवं
केदारक्षेत्रस्य नीलरुद्रः । द्विरुक्तिः समास्यर्था ॥ ३॥

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां नीलरुद्रस्य दीपिका ॥ १॥

इति नारायणविरचिता नीलरुद्रोपनिषद्दीपिका समाप्ता ॥ २४॥